வேதாந்தம்
வழி நூல்கள்.

Advaita Sabha Diamond Jubilee Release — 1 20-4

अद्वैतसभा वज्रोत्सव शुभ निबन्ध : — १

# SIDDHANTA KALPADRUMA

## ॥ सिद्धान्त कल्प द्रुमः ॥

ஸித்தாந்த கல்பத்ருமம்

By

*Mahamahopadhyaya* Yegnaswami Sastriar

महामहोपाध्याय-महोपदेशक-शास्त्ररत्नाकर-

**ब्रह्मश्री यज्ञस्वामि शास्त्रिभिः**

विरचितः





PUBLISHED BY

**SRI KAMAKOTI KOSASTHANAM**

**4, Francis Joseph Street, MADRAS-1**

Advaita Sabha Diamond Jubilee Release — 1

अद्वैतसभा वज्रोत्सव शुभ निबन्ध : — १



# SIDDHANTA KALPADRUMA

## ॥ सिद्धान्त कल्प द्रुमः ॥

By

*Mahamahopadhyaya* Yegnaswami Sastriar

महामहोपाध्याय-महोपदेशक-शास्त्ररत्नाकर-

ब्रह्मश्री यज्ञस्वामि शास्त्रिभिः

विरचित:





PUBLISHED BY

SRI KAMAKOTI KOSASTHANAM

4, Francis Joseph Street, MADRAS-1

20-4

॥ श्रीशिवः शरणम् ॥

# ॥ सिद्धान्तकल्पद्रुमे प्रत्यक्षमञ्जरी ॥

---

अनवद्याशेषविद्यावल्लीकल्पमहीरुहान् ।
श्रीमत्पितामहान्नत्वा कुर्वे किमपि कौतुकम् ॥ १ ॥

विरागितां रागितां च विवृण्वन्वपुरर्धयोः ।
भवाभावाय भवताद्भगवानभवो भवः ॥ २ ॥

अन्विष्यमाणमपि यन्निगमैरशेषै-
रन्वेषते क्वचन गोपसरोरुहाक्षीः ।
चाम्पेयकाननविहारकुतूहलं त-
च्चित्ते चकास्तु मम वस्तु निरस्तहेयम् ॥ ३ ॥

सुखबुद्ध्यै च बालानां स्वधीशुद्ध्यै च पद्यकैः ।
परिभाषोक्तसिद्धान्तसारः संगृह्यते मया ॥ ४ ॥

धर्मार्थकाममोक्षा भवन्ति चत्वार एव पुरुषार्थाः ।
तत्र तु परमश्चरमः श्रुतिषु स नित्यो हि संसिद्धः ॥ ५ ॥

कामादयस्त्रयोऽपि श्रुत्या युक्त्या च नश्वरा विदिताः ।
प्रत्यगभिन्नब्रह्मज्ञानान्मोक्षाप्तिरन्यथा नैव ॥ ६ ॥

तद्ब्रह्मैतज्ज्ञानं तत्र च मानं तथान्यदपि किञ्चित् ।
वक्ष्ये यथामनीषं विदुषां मोदाय बालबोधाय ॥ ७ ॥

प्रमितेः करणं यत्तत्प्रमाणमाहुः प्रमात्वमपि तत्र ।
अनवगतबाधितेतरविषयकधीत्वं स्मृताववृत्तीदम् ॥ ८ ॥

स्मृतिसाधारणलक्षणमबाधितार्थावगाहि बुद्धित्वम् ।
ननु धाराविज्ञाने लक्षणमव्याप्तमाद्यमिति चेन्न ॥ ९ ॥

पूर्वज्ञानाविषयक्षणविषयत्वेन तत्र नाव्याप्तिः ।
नीरूपः कालः कथमिन्द्रियवेद्य इति मा स्म शङ्किष्ठाः ॥१०॥

नीरूपरूपदृष्ट्या घटोऽधुनास्तीति सम्यगनुभूतेः ।
न च शाब्दे दोषोऽयं नैराकांक्ष्येण तत्र नो धारा ॥ ११ ॥

अथवात्र वृत्तिरेका तत्प्रतिफलिता च संविदेकैव ।
स्वविरोधिवृत्तिरेव हि वृत्तेरन्तस्ततो न शङ्कापि ॥ १२ ॥

मिथ्यात्वेन घटादेः सिद्धान्ते तन्मतिः कथं प्रमितिः ।
नानास्ति नेह किञ्चन नात्र भिदास्ति श्रुतिर्हि जागर्ति ॥१३॥

सत्यं तथापि बाधस्तत्त्वज्ञानादनन्तरं तस्य ।
संसारावस्थायां बाधाभावस्तु लक्षणे घटकः ॥ १४ ॥

यत्र त्वात्मैवाभूत्सर्वं यत्र द्वितीयमिव भवति ।
इत्यर्थकश्रुतिद्वयमस्मिन्नर्थे प्रमाणतामेति ॥ १५ ॥

देहात्मधीर्यथा वा प्रमाणमित्येव निश्चितं सद्भिः ।
ब्रह्मज्ञानात्पूर्वं घटादिबुद्धिस्तथेति सिद्धान्तः ॥ १६ ॥

षोढा च तत्प्रमाणं प्रत्यक्षमथानुमानमुपमानम् ।
शब्दोऽर्थापत्तिरथानुपलब्धिश्चेति भेदेन ॥ १७ ॥

प्रत्यक्षप्रमितेर्यत्करणं प्रत्यक्षमानमिदमाहुः ।
प्रत्यक्षप्रमितिस्तु ब्रह्मैवास्मिन्मते श्रुतेर्मानात् ॥ १८ ॥

ननु नित्यं चैतन्यं प्रतिकरणं चक्षुरादि कथमित्थम् ।
प्रतिबिम्बितं मनोमयवृत्तौ चैतन्यमक्षतो जन्यम् ॥ १९ ॥

ज्ञानत्वमौपचारिकमान्तरवृत्ताविती रितं विज्ञैः ।
तदवच्छेदकभावादातः प्रत्यक्षलक्षणं साधु ॥ २० ॥

निरवयवं हि मनस्तत्परिणतिरूपा कथं वृत्तिः ।
इत्थं सावयवं तत्सादिद्रव्यं च तज्जनिश्रवणात् ॥ २१ ॥

वृत्तिज्ञानं कामः श्रद्धा संकल्पविचिकित्से ।
ह्रीर्धीर्भीरित्यादिर्मनसो धर्मस्तथा श्रुतावुक्तेः ॥ २२ ॥

अन्तःकरणगतत्वे कामादेरात्मधर्मतां कलयन् ।
कथमनुभवोऽखिलानामिच्छामि बिभेम्यहं विजानामि ॥२३॥

दाहकताऽनलतादात्म्यारोपणतो यथायसो भवति ।
एवं मनसोऽध्यासादात्मनि तद्धर्मभानमुपपन्नम् ॥ २४ ॥

प्रत्यक्षता कथं स्यादिन्द्रियभूतस्य मनस इति चेन्न ।
तस्येन्द्रियत्वसाधकमानाभावाद्ध्रुवेदिहाध्यक्षम् ॥ २५ ॥

इन्द्रियसंख्यापूरकतास्मिंस्तत्र प्रमाणमिति चेन्न ।
तद्गतसंख्यापूर्तिस्तज्जात्येनेति नैव मर्यादा ॥ २६ ॥

ऋत्विग्गतसंख्याया यजमानेनापि पूरणं दृष्टम् ।
वेदगतपञ्चसंख्यापूरकताऽवेदभारते दृष्टा ॥ २७ ॥

क्वचिदिन्द्रियतः पृथगपि निर्देशात्सिद्धमिन्द्रियान्यत्वम् ।
तर्हि सुखदुःखसाक्षात्कारे साक्षात्त्वहानिरिति चेन्न ॥ २८ ॥

इन्द्रियजन्यत्वं नहि साक्षात्त्वे हेतुरनुमितिव्याप्तेः ।
ईशज्ञानाव्याप्तेः सिद्धान्ते तत्प्रयोजकं ब्रूमः ॥ २९ ॥

ज्ञानगविषयगभिदया प्रत्यक्षत्वं द्विधा हि तत्राद्यम् ।
विषयप्रमाणचैतन्याभेदस्तत्र विस्तरः क्रियते ॥ ३० ॥

घटपटमठाद्युपाधिभिरुपहितनभसो भिदा यथा तद्वत् ।
मानसवृत्तिघटादिकविषयविभेदेन संविदो भेदः ॥ ३१ ॥

आद्या प्रमातृसंवित्प्रमाणसंविद् द्वितीया स्यात् ।
अन्त्या प्रमेयसंविद्विषयावच्छिन्नसंविदपि सैव ॥ ३२ ॥

आधारनीरपूरः केदारे स्याद्यथा तदाकारः ।
तैजसमनोऽपि तद्वद्वृत्तिद्वारा तु तत्तदाकारम् ॥ ३३ ॥

मठमध्यवर्तिनि घटे तदुपहितं खं न भिद्यते यद्वत् ।
वृत्तौ विषयगतायामुपाधिसादेश्यतो न चिद्भिन्ना ॥ ३४ ॥

विषयप्रमाणचैतन्याभेदात्तत्र भवति साक्षात्त्वम् ।
इदमेव फलं वृत्तेर्निर्गमनाङ्गीकृतौ कृतीशानाम् ॥ ३५ ॥

अनुमितिविषये वृत्तेर्निर्गमविरहेण संविदोर्भेदः ।
भिन्नस्थलगोपाधिद्वयमुपहितभेदकं ततः सिद्धम् ॥ ३६ ॥

नियमेन मनसि भवनात्सुखतद्वृत्त्योः सुखं सदाध्यक्षम् ।
ननु गतसुखस्मृतेरपि साक्षात्त्वं स्यादुपाधिसादेश्यात् ॥ ३७ ॥

सादेश्यमिवोपाध्योः समकालत्वं च हेतुरैक्यविधौ ।
अथवा लक्षणघटकं विषयस्य तु वर्तमानत्वम् ॥ ३८ ॥

ननु वर्तमानधर्मज्ञाने तत्स्यात्तथापि शब्दोत्थे ।
न स्याल्लक्षणघटके विषये योग्यत्वसन्निवेशेन ॥ ३९ ॥

धर्मसुखादेरन्तःकरणमयत्वेऽपि किञ्चिदध्यक्षम् ।
किञ्चिन्नेत्यत्र पुनः फलानुमेयो गतिः स्वभावो हि ॥ ४० ॥

अथ सुखवर्तनसमये त्वयि सुखमिति शब्दजन्यविज्ञाने ।
साक्षात्त्वं स्यादिति चेदिष्टं शाब्दापरोक्षवादेऽत्र ॥ ४१ ॥

दशमस्त्वमसीति गिरा लोके वेदे च तत्त्वमसिवाक्यात् ।
अपरोक्ष एव बोधः स्वीक्रियते सन्निकृष्टविषयत्वात् ॥ ४२ ॥

अत एव सन्निकृष्टे पक्षे साक्षात्त्वमनुमितौ साध्ये ।
पारोक्ष्यमिति विवेको दृष्टयनुमित्यनुभवादुभयोः ॥ ४३ ॥

सुरभीदमिति ज्ञाने सौरभ्यांशे परोक्षतैवास्ते ।
योग्यत्वघटितसाक्षात्कारत्वं नात्र वीक्षणायोग्ये ॥ ४४ ॥

ननु तर्हि परोक्षत्वं प्रत्यक्षत्वं च नैव जातिः स्यात् ।
अव्याप्यवृत्तिभावात्सांकर्यस्यापि जागरूकत्वात् ॥ ४५ ॥

किमिदमनिष्टापादनमस्माकं जातिता तयोर्नेष्टा ।
किञ्च घटत्वादेरपि जातित्वं नास्ति निष्प्रमाणत्वात् ॥ ४६ ॥

जातित्वोपाधित्वे तावकपरिभाषयैव परिक्लृप्ते ।
गुणवृद्ध्यादिवदेव त्वदुक्तजात्यादिलक्षणं नास्ति ॥ ४७ ॥

तंत्तद्धर्मे मानं प्रत्यक्षं स्याद्घटो घटोऽयमिति ।
ननु जातित्वे साध्याप्रसिद्धितो नापि मानमनुमानम् ॥ ४८ ॥

चिद्भिन्नं जगदखिलं ध्वंसप्रतियोगि नास्ति समवायः ।
मानुषविषाणतुल्यं जातित्वं तेन जगति निर्णीतम् ॥ ४९ ॥

एवमुपाधित्वेऽपि प्रमाणलेशो न संभवेदेव ।
नीलघटत्वादीनां सद्भावे हि प्रमाणविश्रान्तिः ॥ ५० ॥

वर्तेतेऽवच्छेदकभेदात्संयोगतदभावौ ।
साक्षात्त्वपरोक्षत्वे किमवच्छेदेन संविदि ब्रूहि ॥ ५१ ॥

परिवर्ततेऽन्तरेका वृत्तिर्बहिरेति काचिदत्रान्या ।
निरवयवेऽपि ब्रह्मणि तदवच्छेदेन तदुभयं सुस्थम् ॥ ५२ ॥

एवं च वर्तमानं योग्यं यद्वस्तु तच्चिदाभेदः ।
तद्वृत्त्युपहितसंविदि साक्षात्त्वं तस्य तदिति निष्कृष्टम् ॥५३॥

विषयगमध्यक्षत्वं प्रमात्रभिन्नत्वमस्य निष्कर्षः ।
विषये प्रमातृसत्तातिरिक्तसत्ताविरहितत्वम् ॥ ५४ ॥

याधिष्ठाने सत्ता नैव तदन्यास्ति कल्पिते सत्ता ।
स्वावच्छिन्ने चैतन्येऽध्यस्यन्ते घटादयः सर्वे ॥ ५५ ॥

वृत्तिद्वारा मनसो घटसम्बन्धाच्चितोरभेदश्च ।
तस्माद्घटे घटेत प्रमातृसत्तान्यसत्त्वशून्यत्वम् ॥ ५६ ॥

अनुमितिविषये वह्नावन्तःकरणस्य निर्गमाभावात् ।
विषयावच्छिन्नचितः प्रमात्रभेदो न संभवेदेव ॥ ५७ ॥

ननु धर्माधर्मादावनुमितिविषये भवेदतिव्याप्तिः ।
योग्यत्वस्य च विषये विशेषणत्वेन न क्षतिः कापि ॥ ५८ ॥

रूपाकारकवृत्तौ घटसङ्गिन्यां तदीयपरिमाणः ।
स्वचितः प्रमात्रभेदात्प्रत्यक्षः स्याद्यथोक्तरीत्यैव ॥ ५९ ॥

मैवं स्ववृत्त्युपहितप्रमातृसत्तान्यसत्त्वशून्यत्वम् ।
लक्ष्म ततोऽत्र न दोषः परिमाणाकारवृत्तिविरहेण ॥ ६० ॥

वृत्त्याकारा वृत्तिर्न स्वीक्रियतेऽनवस्थानात् ।
स्वाकारेत्यादि कथं लक्षणमस्यां समन्वेतु ॥ ६१ ॥

मैवं वृत्तेरुदये तस्यां विशयादिविरहेण ।
अनवस्थानभयेन च तस्याः स्वाकारतैवेष्टा ॥ ६२ ॥

साक्षिप्रभासनीये सुखदुःखादौ तथापि दोषश्चेत् ।
तत्रापि शुक्तिरूप्यादाविव वृत्तिः समभ्युपेता हि ॥ ६३ ॥

नन्वन्तःकरणादेः केवलसाक्षिप्रकाश्यतानियमः ।
व्याकुप्येत तदानीमिति चेदस्यार्थमाकलय ॥ ६४ ॥

केवलपदं प्रमाणजवृत्तिनिषेधाय केवलं भवति ।
अहमाकारा मनसो वृत्तिस्तत एव विवरणे प्रोक्ता ॥ ६५ ॥

शुक्तिरजते त्वविद्यावृत्तेरङ्गीकृतेः क्व वा दोषः ।
विषये प्रमात्रभेदे सति योग्यत्वं तु लक्षणे फलितम् ॥ ६६ ॥

चिदभिव्यञ्जकवृत्तावुपयोगः संनिकर्षाणाम् ।
समवायपदे निहितं तादात्म्यं संनिकर्षनिर्वाहि ॥ ६७ ॥

निश्चयसंशयगर्वस्मरणविभेदाच्चतुर्विधा वृत्तिः ।
बुद्धिमनोऽहङ्काराश्चित्तमिति व्यवहृतिस्ततो मनसः ॥ ६८ ॥

धीसाक्षात्त्वं द्विविधं सविकल्पकनिर्विकल्पभेदेन ।
वैशिष्ट्यगोचरा धीः सविकल्पान्या तु निर्विकल्पा स्यात् ॥६९॥

आद्या घटोऽयमिति या सोऽयं चैत्र इति वाक्यजा त्वपरा ।
विषयस्य संनिकर्षाच्छाब्देऽप्युपपादितं हि साक्षात्त्वम् ॥७०॥

संसर्गानवगाहिनि शाब्दत्वं स्यात्कथं हि तन्नियतम् ।
इति चेन्नायं नियमो यत्संसर्गावगाहिता शाब्दे ॥ ७१ ॥

तात्पर्यविषयमर्थं शब्दो बोधयति नान्यमिति नियमः ।
सोऽयमिति वाक्यवक्तुस्तात्पर्यं व्यक्तिमात्रबोधे हि ॥ ७२ ॥

एवं तत्त्वमसीत्यपि वाक्यं शुद्धस्वरूपमात्रपरम् ।
अत्र ह्युपक्रमादीन्यखिलश्रुतिषु स्फुरन्ति लिङ्गानि ॥ ७३ ॥

यत्संसर्गाविषयकसतत्त्वधीजनकता महावाक्ये ।
प्रातिपदिकार्थपरता वाखण्डार्थत्वमिष्यते विद्भिः ॥ ७४ ॥

प्रत्यक्षं द्विविधं स्यात्पुनरपि जीवेशसाक्षिजत्वेन ।
जीवो मनसाऽविष्टं चैतन्यं साक्षि तस्य तदुपहितम् ॥ ७५ ॥

व्यावर्तकमितरान्वयि विशेषणं स्यादुपाधिस्तु ।
स्यादितरान्वयरहितो विशेषको वर्तमानश्च ॥ ७६ ॥

प्रत्यात्ममसौ नाना साक्षी जीवस्य कीर्तितो विबुधैः ।
तस्यैकत्वे चैत्राधिगतं त्वनुसंदधीत मैत्रोऽपि ॥ ७७ ॥

ईश्वरसाक्षी मायोपहितं चैतन्यमुच्यते धीरैः ।
तदुपाधेर्मायाया एकत्वादेक एव स ज्ञेयः ॥ ७८ ॥

इन्द्रो मायाभिरिति श्रुतबहुवचनेन तद्बहुत्वं न ।
तद्गतगुणशक्तिबहुत्वाभिप्राया तु सा श्रुतिर्ज्ञेया ॥ ७९ ॥

एकवचनान्तमायाशब्दैरत एव बोध्यते सेयम् ।
एकवचनश्रुतिः किल बलीयसी लाघवेन तर्केण ॥ ८० ॥

मायाविशेषणं चेच्चैतन्यस्येश्वरत्वमिच्छन्ति ।
तस्या उपाधिभावे तत्साक्षित्वं स्वतो न चिद्भेदः ॥ ८१ ॥

सत्त्वं रजस्तम इति प्रकृतिगुणाः सन्ति तद्विशिष्टस्य ।
चैतन्यस्य क्रमशो भवन्ति हरिविधिगिरीशनामानि ॥ ८२ ॥

सृष्टेः पूर्वं वीक्षणमीशितुरुक्तं तदा समुत्पन्नम् ।
संगच्छतां कथं वा तस्य हि साक्षी विभावितो नित्यः ॥८३॥

जीवे मनोविकारा जायन्ते संनिकर्षतो यद्वत् ।
तद्वन्मायावृत्तिर्जीवादृष्टैर्महेशितुः सृष्टौ ॥ ८४ ॥

सृष्ट्यादिविषयवृत्तौ जातुचिदाबिम्बिता चिदादिमती ।
सैवेक्षणादिशब्दैरुक्ता वेदान्तनिष्णातैः ॥ ८५ ॥

तत्तत्प्रत्यक्षत्वं यथोदितं ज्ञप्तिगं तु सामान्यम् ।
चित्त्वं मतेऽस्मदीये चैतन्यस्यैव साक्षात्त्वात् ॥ ८६ ॥

शुक्तिरजतप्रमायां लक्षणमेतत्प्रयातमिति चेन्न ।
तस्या अपि लक्ष्यत्वान्निखिलप्रत्यक्षलक्षणं ह्येतत् ॥ ८७ ॥

यदि च प्रमाणघटकप्रत्यक्षस्यैव लक्षणं कार्यम् ।
तर्हि विषये प्रदेयं विशेषणं व्यवहृतावबाध्यत्वम् ॥ ८८ ॥

भ्रान्तिस्थले तु विषयो रजतादिर्बाध्यते तदोत्पन्नः ।
संसारावस्थायामातो नातिप्रसङ्ग इति सिद्धम् ॥ ८९ ॥

कलधौतापणस्थरजतं भ्रान्तिज्ञाने विभातु विषयतया ।
तत्कालोदितनूतनरजताङ्गीकारकारणं नास्ति ॥ ९० ॥

अस्ति विभिन्नस्थलगतरजतस्यासंनिकृष्टवस्तुत्वात् ।
प्रत्यक्षविषयता का ज्ञानस्य तु नास्ति संनिकर्षत्वम् ॥ ९१ ॥

ज्ञानं चेदासत्तिः स्यादनुमानादिमानविच्छेदः ।
ज्ञानप्रत्यासत्त्या वह्निप्रत्यक्षसम्भवादद्रौ ॥ ९२ ॥

रजतावयवादीनां रजतोत्पत्तौ निदानभूतानाम् ।
शुक्तौ विरहेण कथं तस्योत्पत्तौ तदेति चेच्छृणु भो ॥ ९३ ॥

प्रतिभासमये रजते सामग्री स्याद्विलक्षणा कापि ।
कथयामि तामिदानीमनुभवमनुसृत्य कल्पितां धीरैः ॥ ९४ ॥

इन्द्रियसंयोगादिदमाकारा धीरुदेति चिद्वलिता ।
सा चाकचक्यविषया सामान्यज्ञानमुच्यते सैव ॥ ९५ ॥

पूर्वोक्तयैव विधया प्रमात्रभिन्नेऽत्र विषयचैतन्ये ।
या विद्यते निगूढा सा शुक्तित्वप्रकाशिका विद्या ॥ ९६ ॥

सादृश्यदृष्टिबोधितराजतसंस्कारकाचदोषाभ्याम् ।
सहिता रजताकारा परिणमते तत्प्रतीतिरूपा च ॥ ९७ ॥

सोपादानसमाना कार्यापत्तिस्तु परिणतिः प्रोक्ता ।
सोपादानविलक्षणसत्ताकत्वं विवर्त इत्युक्तम् ॥ ९८ ॥

शुक्तिरजतं त्वविद्यापरिणामः संविदो विवर्तश्च ।
तच्चेदं चिद्वृत्तिस्वाधिष्ठाने हि कल्पितं सर्वम् ॥ ९९ ॥

सुखमात्मनि समवेतं यथा शरीरे विभाति तर्कनये ।
तदवच्छेदकभावादिदमर्थे स्यात्तथास्य भानमपि ॥ १०० ॥

कूटस्थविषयचैतन्याभेदात्पूर्वमुक्तरीत्यैव ।
साक्ष्यध्यस्तं रजतं सुखादिवत्साक्षिभास्यमित्युक्तिः ॥ १०१ ॥

साक्ष्यध्यस्तसुखादिकमहमस्मि सुखीति भासते यद्वत् ।
तद्वदहं रजतमिति प्रतीतिरुत्पद्यते कथं नेह ॥ १०२ ॥

साक्षिण्यध्यस्तत्वं सुख्यहमिति बुद्धिकारणं नैव ।
निर्मलचिति हि सुखादिकमध्यस्तं घटपटादिवत्सर्वम् ॥ १०३ ॥

यादृशसंस्कारयुताविद्याकार्यत्वमस्ति यस्यास्य ।
तादृगनुभूतिगोचरताङ्गीकार्या तथा च कापत्तिः ॥ १०४ ॥

इदमिति संस्कारयुताविद्याकार्यं घटादिकं सर्वम् ।
अहमिति संस्कारयुताविद्याजनितं तथान्तरं करणम् ॥ १०५ ॥

उभयविधभावनाढ्याविद्याजनितं शरीरमक्षं च ।
तत्तदनुभूतिविषयास्ते ते भावास्तथा तथा क्लृप्तेः ॥ १०६

इदमितिरजतानुभवाहितसंस्कारोपरञ्जिताविद्या ।
सूते शुक्तौ रजतं तेन तदाकारभानमेतस्य ॥ १०७ ॥

साक्ष्यध्यस्तं रजतं तेनैवाभातु तत्र किं वृत्त्या ।
इति चेद्वृत्त्या घटितं साक्षात्त्वं तस्य नान्यथा भवति ॥१०८॥

नन्विदमाकारैका रजताकारा च वृत्तिरन्येति ।
भ्रान्तिज्ञानासिद्धेः प्राभाकरता तवेति चेन्मैवम् ॥ १०९ ॥

वृत्तिद्वितये बिम्बितमेकं चैतन्यमत्र नः समये ।
सत्यानृतार्थविषयं तद्भ्रमरूपं गुरोर्मतं ह्यन्यत् ॥ ११० ॥

अत एव न प्रमाणं साक्षिज्ञानं प्रगीयते प्राज्ञैः ।
नन्वाविद्यकरजतद्वयवैशेष्यं कथं भवेदिति चेत् ॥ १११ ॥

क्षणिकस्थिरव्यवस्था सत्यानां ते यथा स्वभावेन ।
आविद्यकेष्वपि तथा वैलक्षण्यं मते मदीयेऽपि ॥ ११२ ॥

अथवा घटादिविभ्रमजनने माया तु दोषतामेति ।
रजतादावागन्तुककाचादिर्दोष इत्यतो भेदः ॥ ११३ ॥

अत एव जाग्रदर्थाः स्वप्नपदार्थाश्च यान्ति वैरूप्यम् ।
प्रतिभासमात्ररूपा निद्रादोषादिकल्पिताः स्वाप्नाः ॥ ११४ ॥

स्मरणेन व्यवहारात्स्वप्ने सृष्टिस्तु गौरवायैव ।
इति चेत्पश्यामीति व्यवहाराद्वेदतश्च तत्सिद्धेः ॥ ११५ ॥

प्रतिभासमात्ररूपं शुक्तौ रजतं यथा तदोदेति ।
स्वप्ने रथगजतुरगास्तद्वत्प्रतिभासजीविताः सर्वे ॥ ११६ ॥

साधाररथगजादेः किमधिष्ठानं सदेव जानीहि ।
अत एव सदिति बुद्धिर्गजतुरगादाविदं यथा रजते ॥ ११७ ॥

अक्षादेरुपरत्या तद्धेयत्वं च कल्पितं तत्र ।
तुरगोऽहमिति च बुद्धेरापत्तिः पूर्ववत्समाधेया ॥ ११८ ॥

स्वाप्निकगिरिनगरादेर्माया परिणामतां वदन्त्येके ।
अन्तःकरणद्वारा तत्परिणामत्वमूचिरे केचित् ॥ ११९ ॥

शुद्धे यदि चैतन्ये स्वाप्नगजादिः प्रकल्प्यते तर्हि ।
तत्त्वज्ञानात्पूर्वं जाग्रत्कालेऽपि भासतां सोऽयम् ॥ १२० ॥

अत्रोच्यते द्विधा किल कार्यविनाशो निगद्यते निपुणैः ।
सोपादानक एकः कश्चिदुपादानमन्तरा नाशः ॥ १२१ ॥

आद्यो बाधश्चरमो निवृत्तिरनयोस्तु कारणं वक्ष्ये ।
तत्राद्येऽधिष्ठाने धीरन्त्ये दोषनाशभिन्नमती ॥ १२२ ॥

एवं च तत्त्वधीतः पूर्वं स्वाप्नस्य बाधनं नास्ति ।
दण्डात्कलशादेरिव जाग्रद्वृत्त्या निवृत्तिरिष्टात्र ॥ १२३ ॥

एवं तूलाविद्याकार्यत्वे शुक्तिरूप्यसर्पादेः ।
शुक्तिज्ञानाद्बाधो निवृत्तिमात्रं तु मूलजन्यत्वे ॥ १२४ ॥

प्रतिभाससमयसत्ताङ्गीकरणे शुक्तिरूप्यसर्पादेः ।
कालत्रयेऽपि रजतं नास्त्यत्रेति प्रतीयते कस्मात् ॥ १२५ ॥

रजतत्वावच्छिन्नाभावो नात्र प्रतीयते किन्तु ।
लौकिकपरमार्थत्वावच्छिन्नाभाव एव रजतस्य ॥ १२६ ॥

व्यधिकरणावच्छिन्नाभावः सिद्ध्येदिहानुभूत्यैव ।
तद्धर्मविशिष्टमतेस्तदभावज्ञानहेतुताविरहात् ॥ १२७ ॥

ननु रजते सत्यत्वं ज्ञातं नो वा यदा न विज्ञातम् ।
न स्यादभावसाक्षात्कारस्तत्कारणस्य विरहेण ॥ १२८ ॥

यद्यवगतं तदानीं भ्रमविषयाभाससत्यता सिद्धेः ।
तदवच्छिन्ननिषेधो न युज्यते सर्वथापि तद्बाधात् ॥ १२९ ॥

इति चेदत्र ब्रूमः स्वाश्रयसत्यत्वमीक्ष्यते रजते ।
आरोप्यसंनिकर्षस्थले मतास्माकमन्यथाख्यातिः ॥ १३० ॥

अत एव लोहितत्वं नानिर्वचनीयमिष्यते स्फटिके ।
यत्र तु जपाद्युपाधिर्न संनिकृष्टस्तदिष्टमेवात्र ॥ १३१ ॥

इन्द्रियजतदजभेदात्प्रत्यक्षं स्यात्पुनर्द्विधा प्रथमम् ।
रूपादेरध्यक्षं द्वैतीयीकं सुखादिकाध्यक्षम् ॥ १३२ ॥

त्वक्श्रोत्रनयनरसनाघ्राणाख्यानीन्द्रियाणि पञ्चात्र ।
चक्षुः श्रोत्रेतरखान्यात्मस्थानस्थितानि गृह्णन्ति ॥ १३३ ॥

वीचीनयेन शब्दाः कल्प्यन्ते गौरवात्कुतर्कोऽयम् ।
वीणावेणुक्वणनश्रवणानुभवश्च बाधकस्तत्र ॥ १३४ ॥

**इति महामहोपाध्यायश्रीत्यागराजमखिराज
पौत्र यज्ञेश्वरविरचिते सिद्धान्त-
कल्पद्रुमे प्रत्यक्षमञ्जरी ॥**

---

## ॥ अथ अनुमानमञ्जरी ॥

अनुमानमनुमितेर्यत्करणं व्याप्यत्वधीजधीरनुमा ।
तत्त्वेन जनकतायां नानुव्यवसायमश्नुते लक्ष्म ॥ १ ॥

व्याप्तिज्ञानं करणं तद्व्यापारस्तु तज्जसंस्कारः ।
न परामर्शः करणं न व्यापारश्च हेतुतासिद्धेः ॥ २ ॥

न च संस्कारभवत्वादनुमित्यादेः स्मृतित्वमिति शङ्का ।
स्वप्रागभावजन्यं स्मरणं संस्कारमात्रजन्यं वा ॥ ३ ॥

संस्कारजत्वमात्रं ध्वंसानुगतं न हि स्मृतेर्लक्ष्म ।
धीत्वविवक्षायामपि सोऽयमिति प्रत्यये प्रसज्येत ॥ ४ ॥

यत्र व्याप्तिस्मरणादनुमा संस्कारनाशतस्तत्र ।
व्यभिचाराद्व्यापारः संस्कारः स्यात्कथं ब्रूमः ॥ ५ ॥

स्मृतिधारानुपपत्त्या न फलं संस्कारनाशकं कल्प्यम् ।
व्याप्तिस्मृतिस्थलेऽपि स्यात्संस्कारस्य हेतुता तस्मात् ॥ ६ ॥

एवं च यत्र पक्षे धूमज्ञानं ततस्तदुद्बुद्धः ।
व्याप्तेः संस्कारोऽपि स्यादनुमा तत्र वह्निमत्त्वेन ॥ ७ ॥

तत्र व्याप्तिस्मरणं तज्जन्या व्याप्यवत्त्वबुद्धिर्वा ।
नैवानुमितौ हेतुर्मानाभावेन गौरवेणापि ॥ ८ ॥

तच्च व्याप्तिज्ञानं वह्निज्ञानांश एव करणं स्यात् ।
न तु पक्षज्ञानांशे तत्साक्षात्त्वस्य पूर्वमुक्तत्वात् ॥ ९ ॥

निखिलस्वाश्रयसंश्रितसाध्यसमानाधिकरणता व्याप्तिः ।
व्यभिचारधीविनाकृतसहचारज्ञानतोऽधिगन्तव्या ॥ १० ॥

सकृदपि वा भूयो वा सहचारज्ञानमत्र हेतुरिति ।
नास्त्येव कोऽपि नियमो व्यभिचारादुक्त एव तद्धेतुः ॥११॥

केवलमन्वयिरूपं तदेतदनुमानमुच्यते कथकैः ।
न तु केवलान्वयित्वं नापि व्यतिरेकिताऽस्य सिद्धान्ते ॥१२॥

ब्रह्मगविरहप्रतियोगित्वादखिलस्य नाद्यमुपपन्नम् ।
अन्यव्याप्तिज्ञानादन्यानुमितेरसंभवान्नान्त्यम् ॥ १३ ॥

मह्यां भेदानुमितिर्न स्यादिति चेन्न संभवेदेव ।
अत एवार्थापत्तिः प्रमाणमत्रेति वक्ष्यते पश्चात् ॥ १४ ॥

स्वार्थपरार्थविभेदादनुमानं तद्‌द्विधाद्यमुपदिष्टम ।
न्यायेन साध्यमपरं न्यायोऽवयवोच्चयः क्रमाकाङ्क्षी ॥ १५ ॥

अस्मन्मते प्रतिज्ञाहेतूदाहरणरूपता तस्य ।
अथवोदाहरणादित्रिकरूपत्वं न पञ्चता तस्य ॥ १६ ॥

उक्तत्रिकयोरेकं व्याप्तिं लिङ्गस्य पक्षधर्मत्वम् ।
बोधयितुमलमतोऽन्यत्कण्ठक्षोभाय केवलं वक्तुः ॥ १७ ॥

अद्वैतग्रन्थेऽस्मिन्ननुमानोक्तिः किमर्थमिति चेन्न ।
ब्रह्मान्यनिखिलवस्तुषु मिथ्यात्वस्य प्रसाधनायैव ॥ १८ ॥

चिद्भिन्नमिदं मिथ्या चिद्भेदविशिष्टभासमानत्वात् ।
शुक्तिरजतं यथा वा तन्मिथ्यात्वं तु साधितं पूर्वम् ॥ १९ ॥

नन्वप्रयोजकत्वं हेतोरिति चेन्न सर्वमिथ्यात्वे ।
चिद्भिन्नत्वस्य लघोःप्रयोजकत्वेन तर्कसद्भावात् ॥ २० ॥

अत्यन्ताभावप्रतियोगित्वं यावदाश्रये स्वस्य ।
मिथ्यात्वं भावानां विद्वद्भिः प्रोच्यते तथान्यच्च ॥ २१ ॥
अंशी स्वांशगताभावप्रतियोगीतरांशिवत्तत्त्वात् ।
इत्यनुमानं केचिन्मिथ्यात्वस्य प्रसाधकं ब्रुवते ॥ २२ ॥
सन्घट इति प्रतीत्या प्रत्यक्षेणास्ति बाध इति चेन्न ।
स्वाधिष्ठानगसत्ताविषयीकरणात्प्रतारितोऽस्यनया ॥ २३ ॥
ननु नीरूपं ब्रह्म प्रतीयते चक्षुषा कथं ब्रूहि ।
अङ्ग निरूपय किञ्चिन्नीरूपं रूपमीक्षमाणस्त्वम् ॥ २४ ॥
निरूपं चेद्द्रव्यं चक्षुरयोग्यं न मे चितिर्द्रव्यम् ।
समवायिकारणं वा गुणाश्रयं वा त्वयोच्यते द्रव्यम् ॥ २५ ॥
ब्रह्मणि गुणसामान्यं निगमशिरोभिर्निगद्यते निखिलैः ।
किञ्च समवायनामा सम्बन्धः कल्प्यते त्वया विफलम् ॥ २६ ॥
तुष्यतु भवानिदानीं ब्रह्मद्रव्यत्वमिष्यते कामम् ।
तदपि न तवेष्टसिद्धिः कालवदेवास्य चाक्षुषत्वं स्यात् ॥ २७ ॥
अथवा त्रिविधं सत्त्वं तत्र चितः पारमार्थिकं सत्त्वम् ।
तद्व्यावहारिकं स्याद्घटादिके प्रातिभासिकं रजते ॥ २८ ॥
स्वासाधारणरूपैर्न घटादीनां निषिध्यते सत्ता ।
किन्तु परमार्थभावेनैवाध्यक्षस्य कात्र बाधकता ॥ २९ ॥

**॥ इति महामहोपाध्याय श्रीत्यागराजमखिराज-**
**पौत्रयज्ञेश्वरविरचिते सिद्धान्तकल्पद्रुमे**
**अनुमानमञ्जरी ॥**

## अथ उपमानमञ्जरी

उपमानमुपमितेर्यत्करणं सादृश्यबुद्धिरुपमा स्यात् ।
करणं सादृश्यमतिस्तत्रैतां प्रक्रियां प्रवक्ष्यामि ॥ १ ॥

अवगतगवादिपिण्डः कश्चन विपिनं विगाह्य गोसदृशम् ।
गवयं निरीक्षमाणो मम गौरेतत्समेति निश्चिनुते ॥ २ ॥

अन्वयतो व्यतिरेकादपि करणं सदृशतामतिर्गवये ।
गवि गवयसदृशताधीः फलमियमुपमा विलक्षणा प्रमितिः ॥३॥

गवि संप्रयोगविरहान्नेदं प्रत्यक्षमनुमितिश्च न वा ।
गवयगते सादृश्ये व्यधिकरणत्वेन लिङ्गताविरहात् ॥ ४ ॥

नन्वेतत्सादृश्यप्रतियोगित्वान्मदीयगौरमुना ।
सदृशीत्यनुमितिशङ्कां मा कार्षीरत्र पक्षपातेन ॥ ५ ॥

व्याप्तिज्ञानाभावेऽप्येतत्सदृशीति धीसमुल्लासात् ।
उपमित्यनुभवभावादप्युपमानं पृथक् प्रमाणं नः ॥ ६ ॥

॥ इति सिद्धान्तकल्पद्रुमे उपमानमञ्जरी ॥

---

## ॥ अथ शब्दमञ्जरी ॥

तात्पर्यगोचराबाधितसंसर्गावबोधकं वाक्यम् ।
शब्दप्रमाणमाहुर्लक्षणघटकप्रयोजनं सुगमम् ॥ १ ॥

शाब्दमितावाकाङ्क्षा योग्यत्वं सन्निधिश्च तात्पर्यम् ।
चत्वारि कारणानि क्रमशस्तेषां निरूप्यते लक्ष्म ॥ २ ॥

तत्राकांक्षाऽन्योन्यं जिज्ञासागोचरत्वयोग्यत्वम् ।
कारकशब्दश्रवणे जिज्ञासा जायते क्रियायां यत् ॥ ३ ॥

जिज्ञासाहीनोऽपि प्रत्येति पदात्ततोऽत्र योग्यत्वम् ॥
विनिविष्टं तच्च भवेत्क्रियात्वमथ कारकत्वं च ॥ ४ ॥

भेदान्वये भवेदियमाकांक्षाऽभेदबोधने त्वेषा ।
सदृशविभक्तिकशब्दप्रतिपाद्यत्वं ततश्च नाव्याप्तिः ॥ ५ ॥

इयमेव ह्याकांक्षामिक्षायां वैश्वदेवयागस्य ।
न तु वाजिने भवेदिति सिद्धान्तोऽयं बलाबलन्याये ॥ ६ ॥

ननु वाजिनस्य चास्ते प्रदेयवस्तुत्वरूपयोग्यत्वम् ।
स्वसमानान्वयबोधाभावविशिष्टं तदेव तद्रूपम् ॥ ७ ॥

आमिक्षान्वयतः प्रागीदृशबोधो न जायते तस्मात् ।
आमिक्षायामेवैतद्योग्यत्वं न वाजिने चरमे ॥ ८ ॥

तात्पर्यविषयसंसर्गाबाधं योग्यतेति कथयन्ति ।
अत एव प्रामाण्यं स्तुत्यादिपरार्थवादवाक्यानाम् ॥ ९ ॥

तत्त्वमसीति च वाक्ये तात्पर्यार्थस्य बाधविरहेण ।
वाच्यार्थान्वयबाधेऽप्येवं सर्वत्र निर्णयो बोध्यः ॥ १० ॥

पदजन्यार्थोपस्थितिरासत्तिः स्याद्विना विलम्बेन ।
पदजन्येति निवेशात्प्रत्यक्षाद्यैर्न शाब्दबुद्धिः स्यात् ॥ ११ ॥

अत एवाध्याहारः पदस्य वेदे च लोके च ।
द्वारमिषेत्वेत्यादौ पिधेहि तद्वच्छिनद्मीति ॥ १२ ॥

अत एव विकृतियागेष्वग्न्यादिपदं विहाय बाधेन ।
सूर्यादिपदस्याध्याहारो दशमे विनिर्णीतः ॥ १३ ॥

तत्र पदार्थो द्विविधः शक्यो लक्ष्यश्च तत्र शक्तिस्तु ।
मुख्यार्थे पदवृत्तिर्गवादिशब्दस्य गवि यथा वृत्तिः ॥ १४ ॥

सा च पदार्थान्तरमित्युपगच्छामो वयं यथा भाट्टाः ।
कार्यानुकूलशक्तिर्हेतुषु सर्वत्र संमतास्माकम् ॥ १५ ॥

अर्थस्मृत्यूह्या सा तद्विषयत्वं च शक्यतामाहुः ।
सा जातावेव स्यान्न व्यक्तौ गौरवाद्बहुत्वेन ॥ १६ ॥

ननु तर्हि व्यक्तिमतिः कथमिति चेज्जातिभानसामग्र्या ।
व्यक्तेरपि भास्यत्वादातो नातिप्रसङ्गलेशोऽपि ॥ १७ ॥

यद्वा व्यक्तौ शक्तिः स्वरूपसत्येव हेतुतामयते ।
जातौ तु ज्ञाता सा नातोऽन्यस्यापि भानमिति दोषः ॥ १८ ॥

जातौ शक्तिज्ञाने विनाविलम्बं हि भासते व्यक्तिः ।
अत एव न्यायनयेऽप्यन्वयशक्तिः स्वरूपसत्येव ॥ १९ ॥

तज्जातिरेव वाच्या वाच्यत्वं ज्ञातशक्तिविषयत्वम् ।
अथवा लक्षणया स्यादाश्रयलाभो यथा तु नीलपदात् ॥ २० ॥

नीलपदस्य हि रूपे शक्तिर्व्यक्तिस्तु लक्षणागम्या ।
अत एव तीर्थकारा अनन्यलभ्यस्य शक्यतेत्याहुः ॥ २१ ॥

शक्यो निरूपितोऽयं लक्ष्यार्थोऽथ प्रवक्ष्यते विशदम् ।
लक्ष्यस्तु लक्षणाया विषयः सा च द्विधा विधामयते ॥ २२ ॥

केवलपूर्वा काचिल्लक्षितपूर्वा च काचिदत्राद्या ।
साक्षाच्छक्येन समं सम्बन्धःस्यात्परंपरातोऽन्या ॥ २३ ॥

गङ्गायामित्यादौ प्रथमा चरमा द्विरेफादौ ।
अग्निर्वटुरित्यादौ गौणी व्यवहारभागिनी सैव ॥ २४ ॥

पुनरपि सा त्रिविधा स्याज्जहती काचित्तथाऽजहत्यन्या ।
जहदजहतीति काचिन्निरूपयामः क्रमादमूः सर्वाः ॥ २५ ॥

शक्यार्थमृतेऽर्थान्तरधीजनिका लक्षणा प्रथमा ।
अनया विषमिति वाक्ये रिपुगृहभुक्तेर्निवृत्तिरधिगम्या ॥२६॥

शक्यार्थयुतार्थान्तरधीकृच्छुक्ला पटीत्यादौ ।
अपरानया प्रतीतिः शुक्लपदाद्रूपतद्वतोर्भवति ॥ २७ ॥

वाच्यैकदेशबोधं जनयति या लक्षणा तृतीया सा ।
तत्त्वमसि सोऽयमादौ वाक्ये सेयं निरूपिता विद्भिः ॥ २८ ॥

तत्र हि विशिष्टवाचकतत्त्वंपदयोर्विरुद्धमैक्यमिति ।
चैतन्यमात्रबोधो लक्षणयैवेति संप्रदायमतम् ॥ २९ ॥

अत्र नवीनाः केचिच्छक्त्यैवार्थप्रतीतिरित्याहुः ।
नष्टो घट इत्यादौ केवलघटधीर्न लक्षणा साध्या ॥ ३० ॥

शक्त्योपस्थापितयोर्विशिष्टयोरैक्यबाधविज्ञाने ।
केवलविशेष्यबोधस्तयैव भवतीति निश्चितं धीरैः ॥ ३१ ॥

यत्र तु विवक्षितार्थः शक्त्यावगतोऽपि परतन्त्रः ।
नित्यो घट इत्यादौ लक्षणया स्यात्प्रयोजनं तत्र ॥ ३२ ॥

वाच्यैकदेशबुद्ध्यै यदि सर्वत्रापि लक्षणां ब्रूषे ।
गेहे घट इत्यादावपि किं नाङ्गीकरोषि लक्ष्यार्थम् ॥ ३३ ॥

तत्त्वमसीत्यादावपि गुरुचरणानां तु लक्षणेत्युक्तिः ।
अभ्युपगमेन वादस्तेन तदुक्तेर्न रोधोऽपि ॥ ३४ ॥

काकेभ्यो दधिरक्षेत्यादौ तदुदाहृतिर्बोध्या ।
काकत्वपरित्यागाद्रूपेणान्येन तद्गृहीतेश्च ॥ ३५ ॥

तात्पर्यानुपपत्तिः काकेभ्य इति स्थलानुरोधेन ।
बीजं हि लक्षणाया नान्वयबाधोऽस्य सर्वतो विरहात् ॥३६॥

गम्भीरायां नद्यामित्यादौ वाक्यलक्षणापीष्टा ।
शक्तिविरहेऽपि वाक्ये स्वबोध्यसम्बन्धलक्षणा भवति ॥ ३७ ॥

वायुर्वै क्षेपिष्ठेत्यादीनामर्थवादवाक्यनाम् ।
प्राशस्त्ये सोऽरोदीदित्यादौ निन्दितत्वे सा ॥ ३८ ॥

एकपदस्थानीयं वाक्यं नातः पदान्तरं व्यर्थम् ।
तेनार्थवादविध्योः पदैकवाक्यत्वमिष्यते निपुणैः ॥ ३९ ॥

प्रत्येकसमन्वितयोराकांक्षातः पुनः समुच्चित्य ।
अङ्गाङ्गिभावबोधो यत्र तु वाक्यैकवाक्यता तत्र ॥ ४० ॥

एवं द्विविधः सम्यङ् निरूपितोऽर्थो विभागेन ।
तदुपस्थितिरासत्तिः सा शाब्दे हेतुरनुविधायित्वात् ॥ ४१ ॥

वाक्यार्थान्वयबोधे महति तथावान्तरान्वयधीः ।
हेतुरिति संगिरन्ते तदनुविधानेन शास्त्रनिष्णाताः ॥ ४२ ॥

तात्पर्यमिह निरूप्यं क्रमशः प्राप्तं वदन्ति तत्रैके ।
तद्धीच्छोच्चरितत्वं तात्पर्यमिदं न सम्यगितिविज्ञाः ॥ ४३ ॥

अव्युत्पन्नोच्चरितादपि वाक्याच्छाब्दबोधनिष्पत्तेः ।
नहि तत्र तद्भ्रमोऽपि प्रवक्तुरज्ञाननिश्चयेऽप्येवम् ॥ ४४ ॥

न च तत्रैशं हेतुस्तात्पर्यं नास्ति कस्यापि ।
वाक्यार्थबोधजननात् किं तर्हि मतं तवेति चेद्ब्रूमः ॥ ४५ ॥

तद्बुद्धिजननशक्तिस्तात्पर्यं नाम कथ्यते कथकैः ।
कार्यानुकूलशक्तिर्हेतुषु सर्वत्र सम्मताऽस्माकम् ॥ ४६ ॥

ननु भज हरिमित्यादौ शौरिपरेऽप्यस्तु सूरधीरिति चेत् ।
तदितरधीच्छानुच्चरितत्वस्याप्यत्र लक्षणे घटनात् ॥ ४७ ॥

ननु बोधद्वयतत्परवाक्येऽव्याप्तिः प्रसज्यते तर्हि ।
मैवं तदितरमात्रेत्यादिविवक्षावशेन तद्विरहात् ॥ ४८ ॥

एवं च विवरणोक्तिस्तात्पर्यमतिर्न शाब्दहेतुरिति ।
तात्पर्यान्तरविषयाऽन्यथाविचारो हि निष्फलो निषदाम् ॥ ४९ ॥

संशयविपर्ययोत्तरशाब्दे हेतुर्न सर्वतोऽप्येषा ।
इति केचिदूचुरार्या विवरणकारस्य हृदयमत्रेति ॥ ५० ॥

तात्पर्यमिदं वेदे विचारनिर्णीतलिङ्गतो गम्यम् ।
संयोगविप्रयोगप्रकरणमुखतस्तु लौकिके वाक्ये ॥ ५१ ॥

मानान्तरसिद्धार्थकलौकिकवाक्यं समस्तमनुवादि ।
न तु वेदोऽपि, तदर्थो धर्मादिर्मीयते न चान्येन ॥ ५२ ॥

कार्यपरमेव मानं मीमांसकसंमतं न तत्साधु ।
सिद्धपरेष्वपि शक्तेर्ग्रहणाद्वाक्यार्थबोधसिद्धेश्च ॥ ५३ ॥

पुत्रस्ते संजातः कन्या ते गर्भिणीति वाक्येषु ।
तद्दृष्टेरत एव ब्रह्मपरा मानमुपनिषदः ॥ ५४ ॥

सर्वज्ञेशकृतत्वाद्वेदप्रामाण्यमूचिरे केचित् ।
नित्यतया पुंदोषाभावान्मीमांसकैरिदं कथितम् ॥ ५५ ॥

अस्माकं तु न नित्यो वेदस्तज्जन्मकीर्तनादेवम् ।
न द्विक्षणजीवित्वं सेयं श्रुतिरित्यबाधितप्रमितेः ॥ ५६ ॥

सोऽयं ग इति प्रमितेर्वर्णानां च क्षणस्थितिर्नेष्टा ।
एवं च वर्णमालारूपो वेदश्च न क्षणिकः ॥ ५७ ॥

सृष्ट्यादावुत्पत्तिः प्रलये नाशश्च वेदबृन्दानाम् ।
न तु मध्ये वर्णालीप्रकल्पनातो हि गौरवं भवति ॥ ५८ ॥

उक्तप्रमितिविरोधादुत्पत्तिविनाशधीः प्रमाणं नो ।
तद्व्यञ्जकध्वनिजनिविनाशविषया परम्परातो वा ॥ ५९ ॥

न च पौरुषेयतायां वेदः कृतको न मानमिति शङ्क्यम् ।
पुरुषोच्चरितत्वं नहि पुरुषकृतत्वं च पौरुषेयत्वम् ॥ ६० ॥

पुरुषाधीनः पूर्वक्रमनिरपेक्षक्रमो हि तत् भवति ।
सर्गादावीशः किल कलयति निगमान्यथापूर्वम् ॥ ६१ ॥

इदमेव गुरुभिरीरितमपौरुषेयत्वघटकमुपपन्नम् ।
वेदे नहीदृशं तत्किन्तु पुराणेतिहासमुख्येषु ॥ ६२ ॥

इति पौरुषेयतदितरभेदाच्छब्दो निरूपितः सम्यक् ।
अत्र प्रमाददोषात्त्यक्तो विषयस्तु मृष्यतां सद्भिः ॥ ६३ ॥

**इति महामहोपाध्यायश्रीत्यागराजमखिपौत्र**
**यज्ञेश्वरविरचिते सिद्धान्तकल्पद्रुमे**
**आगममञ्जरी**

---

## ॥ अथ अर्थापत्तिमञ्जरी ॥

उपपाद्यादुपपादककलनामर्थप्रकल्पनामाहुः ।
करणमुपपाद्यबुद्धिः फलमुपपादकमतिर्भवेदत्र ॥ १ ॥

उपपाद्यं नामेदं येन विना यस्य नोपपन्नत्वम् ।
यस्याभावे यस्यानुपपत्तिस्तदुपपादकं तत्र ॥ २ ॥

पीनत्वमनुपपन्नं दिनोपवासस्य रात्रिभुक्तिमृते ।
रात्र्यशनस्याभावे तदनुपपन्नं च तत्र तद्योज्यम् ॥ ३ ॥

फलकरणयोर्द्वयोरप्यर्थापत्तिः प्रयुज्यते शब्दः ।
तत्पुरुषात्फलबोधः करणमतिः स्याद्बहुव्रीहेः ॥ ४ ॥

दृष्टश्रुतार्थभिदया द्विविधार्थापत्तिरिष्यते सेयम् ।
उपपाद्ये दृष्टे स्यादाद्या तत्र श्रुते त्वपरा ॥ ५ ॥

प्रतिपन्ने रजतमिति प्रतिषेध्यत्वं न युज्यते सत्त्वे ।
अत एव सत्त्वविरहः सद्भेदो वा प्रकल्प्यते तस्य ॥ ६ ॥

शोकं तरतीत्यादौ ज्ञाननिवर्त्यत्वमुच्यमानं हि ।
बन्धस्य सत्यतायामयुक्तमनृतत्वमस्य कल्पयति ॥ ७ ॥

अभिधानाभिहितार्थापत्तिविभेदेन सा द्विधा श्रौती ।
श्रुतवाक्यलेशकल्प्यं पदान्तरं यत्र तत्राद्या ॥ ८ ॥

द्वारंपदं न बोधं जनयितुमीष्टे विना पिधेहिपदम् ।
विश्वजितेत्यादावपि फलबोधो नाधिकारशब्दमृते ॥ ९ ॥

अभिधानानुपपत्तिज्ञानं बोधात्पुरा कथं ब्रूहि ।
अभिधानं तात्पर्यं करणव्युत्पत्तिलभ्यमिह बोध्यम् ॥ १० ॥

द्वाःकर्मकाभिधानक्रियापरत्वं विना पिधेहिपदम् ।
नात्रोपपन्नमितिधीर्बोधात्पुरतोऽपि संभवत्येव ॥ ११ ॥

वाक्यार्थेऽनुपपन्ने यत्रार्थोऽन्यः प्रकल्प्यते तत्र ।
स्यादभिहितपदपूर्वाऽनुपपत्तिरिति प्रतीयते प्राज्ञैः ॥ १२ ॥

ज्योतिष्टोमेन यजेतेत्यादावाशु नाशियागस्य ।
स्वर्हेतुता न युक्तेत्यपूर्वपरिकल्पना विदुषाम् ॥ १३ ॥

अनुमानेन गतार्था नार्थापत्तिर्यतोऽन्वयव्याप्तिः ।
न ज्ञातुमत्र शक्या व्यतिरेक्यनुमाऽत्र वारिता पूर्वम् ॥ १४ ॥

अत एवार्थापत्तौ नानुमिनोमीति जायते बुद्धिः ।
किन्त्वनुभवोऽखिलानामिदममुना कल्पयामीति ॥ १५ ॥



तेन विनानुपपन्नं तदिति मतिः करणमीरितं पूर्वम् ।
तेन विनानुपपत्तिः का नामेति प्रदर्शयिष्यामः ॥ १६ ॥

तदभावनियतविरहप्रतियोगित्वं निरुच्यते सेयम् ।
व्यतिरेकितया तार्किकगदिते सर्वत्र नः प्रमाणमिदम् ॥ १७ ॥

**इति महामहोपाध्याय श्रीत्यागराजमखिराज
पौत्रयज्ञेश्वरविरचिते सिद्धान्तकल्पद्रुमे
अर्थापत्तिमञ्जरी**

---

## ॥ अथ अनुपलब्धिमञ्जरी ॥

अथ धीकरणकभिन्नाभावानुभवस्य हेतुरसमानः ।
स्यादनुपलब्धिरूपं प्रमाणमित्याहुरनुभवालम्बाः ॥ १ ॥

अनुमानव्यावृत्तिर्भिन्नान्तेनानुभूतिशब्दात्तु ।
संस्कारस्य निवृत्तिः कालादेश्चासमानशब्देन ॥ २ ॥

नन्वनुपलब्धिमात्रादतीन्द्रियाभावनिश्चयोत्पत्तौ ।
कथमनुमानापेक्षेत्याशङ्का नैव कार्यात्र ॥ ३ ॥

योग्यानुपलम्भः खलु करणं न त्वनुपलब्धिमात्रमिह ।
धर्माद्यभावनिश्चयविरहादुपलम्भविरहसत्त्वेऽपि ॥ ४ ॥

अधिकरणे योग्यत्वं प्रतियोगिनि वा न चादिमः पक्षः ।
आत्मनि धर्माधर्माद्यभावबुद्धिप्रसङ्गदुष्टत्वात् ॥ ५ ॥

स्तम्भे पिशाचभेदाद्यनिश्चयापत्तितो नान्त्यः ।
इति चेद्योग्या चासाविति विग्रहतो न दोषलेशोऽपि ॥ ६ ॥

योग्यत्वमनुपलब्धेः कीदृशमिति चेच्छृणु त्वमवधानात् ।
प्रतियोगितर्कतर्कणयोग्यप्रतियोगिकत्वमेवैतत् ॥ ७ ॥

एवं च पुण्यपापाद्यभावबुद्धिप्रसञ्जनं नास्ति ।
नापि स्तम्भे भूताद्यन्योन्याभावबुद्ध्यनापत्तिः ॥ ८ ॥

आलोकवर्तिघटादेरभावबुद्धिस्तु संभवत्येव ।
यद्यत्र घटःस्यादयमुपलभ्येतेति तर्कयोग्यत्वात् ॥ ९ ॥

नन्वेवमन्धकारे तत्र तदापादनं न शक्यं हि ।
क्वचिदापादनविरहेऽप्यस्ति च योग्यत्वमनुगतिस्तेन ॥ १० ॥

अधिकरणेन्द्रिययोगादभावधीरनुपलब्ध्यचेति ।
भवदभिमतं विवक्षितमिन्द्रियमेवास्त्वभावधीजनकम् ॥ ११ ॥

मैवं साहंकारितयानुपलब्धेर्हेतुता त्वयाप्युक्ता ।
करणत्वमेव कल्प्यं न ह्यक्षेणास्त्यभावसंसर्गः ॥ १२ ॥

अधिकरणविषयवृत्त्या बहिरुपगतया प्रमात्रभेदे न ।
प्रत्यक्षत्वमभावेऽप्यापतितं चेत्समापततु ॥ १३ ॥

न हि नः प्रत्यक्षत्वं करणविशेषप्रयुक्तमत एव ।
तत्त्वमसि सोऽयमादौ शाब्दं प्रत्यक्षमङ्ग्यकारि मया ॥ १४ ॥

इन्द्रियजाया वृत्तेर्विलक्षणा त्वनुपलम्भसंभूता ।
अत एव प्रत्यक्षादस्या मानान्तरत्वमुपपन्नम् ॥ १५ ॥

भ्रमविषयानिर्वचनीयाभावं प्रति समस्तयोनिरपि ।
माया नोपादानं स्यादिति शङ्का न कर्तव्या ॥ १६ ॥

आरोप्यसंनिकर्षस्थलेऽन्यथाख्यातिसंभवादत्र ।
नानिर्वाच्योत्पत्तिर्भूतलरूपादिगस्य भानेन ॥ १७ ॥

अथवानिर्वचनीयो विभात्वाभावो भ्रमे तदोत्पन्नः ।
मायैव तस्य योनिर्न च वैरूप्यादयोनिता शङ्क्या ॥ १८ ॥

नहि योनिकार्ययोरतिसारूप्यं क्वापि दृश्यते लोके ।
मृत्त्वघटत्वाभ्यां किल मृद्घटयोश्चापि दृश्यते भेदः ॥ १९ ॥

यत्किञ्चित्साजात्यं मिथ्यात्वमिहापि संभवत्येव ।
सत्यघटविरहयोनिः कथमिति शङ्कापि सप्रतीकारा ॥ २० ॥

यदि च विलक्षणकार्योत्पत्तिर्ब्रह्मैव कार्ययोनिः स्यात् ।
स्यादेव विभ्रमाधिष्ठानत्वं परिणतिस्तु मायायाः ॥ २१ ॥

प्रागुत्पत्तिमदत्यन्तान्योन्याभावरूपभेदेन ।
चातुर्विध्यमभावस्येत्याहुः प्रक्रियाकुशलाः ॥ २२ ॥

स प्रागभावनामा प्रागुत्पत्तेर्मृदादिगो यस्तु ।
अत्र घटो भवितेति प्रतीतिरत्र प्रमाणतामेति ॥ २३ ॥

दण्डनिपातानन्तरभावी कलशस्य योऽभावः ।
ध्वस्तप्रतीतिगम्यो ध्वंसो नाम प्रगीयते विबुधैः ॥ २४ ॥

आश्रयनाशान्नाशो घटादिनाशस्य कथ्यते कृतिभिः ।
तस्यापि प्रतियोगी घटादिरुन्मज्जनं ततो नास्ति ॥ २५ ॥

नित्याधिकरणनिष्ठध्वंसध्वंसः कथं भवेदिति चेत् ।
न चितोऽन्यदस्ति नित्यं चिति च ध्वंसस्तदात्मको विदितः॥२६॥

नाधिष्ठानादन्यः कल्पितनाशः सुधीभिरुपदिष्टः ।
इदमंशसंविदेव हि कल्पितरजतस्य नाश इत्युक्तम् ॥ २७ ॥

यत्र तु यस्याभावः कालत्रितयेऽप्यसौ तृतीयः स्यात् ।
वायौ रूपाभावः सोऽयं वियदादिवद्विनाशी च ॥ २८ ॥

नेदमिदं भवतीति प्रतीयमानस्तुरीयः स्यात् ।
भेदविभागपृथक्त्वाद्यभिधानैरेव बोध्यमानोऽयम् ॥ २९ ॥

सादौ सादिरनादावनादिरयमिष्यते विरहः ।
घटपटभेदः प्रथमश्चरमस्तु ब्रह्मजीवयोर्भेदः ॥ ३० ॥

द्विविधोऽप्ययं विभेदो ध्वंसप्रतियोगिताश्रयो ज्ञेयः ।
मूलाविद्यानाशे नश्यति सर्वं हि तत्पराधीनम् ॥ ३१ ॥

सोपाधिकनिरुपाधिकभेदाद्भेदः पुनर्द्विधा ज्ञेयः ।
सोपाधिकोऽप्युपाधिन्याप्यस्थितिको यथा वियद्भेदः ॥ ३२ ॥

निरुपाधिकस्तु भेदः पटे घटस्येति जगदिरे धीराः ।
ब्रह्मजगतोर्विभेदे स्यादद्वैतस्य हानिरिति चेन्न ॥ ३३ ॥

तात्त्विकभेदाभावात्कल्पितभेदेन का क्षतिर्ब्रूहि ।
उक्तं सुरेश्वरार्यैः कल्पितमद्वैतघातकं नेति ॥ ३४ ॥

यद्यपि नृसिंहचरणैर्निरकारि प्रागभावोऽयम् ।
तदपि तदङ्गीकरणं विवरणतत्त्वप्रदीपिकाद्युक्त्या ॥ ३५ ॥

एवं प्रमाणषट्कं निरूपितं तत्प्रमात्वस्य ।
स्वत एव च निष्पत्तिर्ज्ञानं चेति प्रचक्षते निपुणाः ॥ ३६ ॥

तद्वद्विशेष्यकत्वं प्रामाण्यं तत्प्रकारयुतम् ।
स्मृत्यनुभवसाधारणमेतत्सफलप्रवृत्तिजनिहेतुः ॥ ३७ ॥

तस्य ज्ञानोत्पादकसामग्र्येव प्रयोजिका भवति ।
नहि तत्र गुणो हेतुर्गुणधर्मस्यानुगामिनो विरहात् ॥ ३८ ॥

तत्तत्प्रमासु तत्तद्गुणहेतुत्वं च शङ्कनीयं नो ।
अन्वयतो व्यतिरेकादपि तद्व्यभिचारदर्शनादेव ॥ ३९ ॥

साक्षात्कारे भूयोऽवयवेन्द्रियसंनिकर्षस्य ।
रूपात्मादिप्रमितौ व्यभिचारान्नास्ति हेतुत्वम् ॥ ४० ॥

सल्लिङ्गपरामर्शो नानुमितौ गुणतया हेतुः ।
पांसुपरामर्शादपि पावकसिद्धेः प्रमात्वसंदृष्टेः ॥ ४१ ॥

एवं प्रमान्तरेष्वपि गुणहेतुत्वं निरस्यतां युक्त्या ।
ननु सामग्र्यविशेषाद्भ्रमप्रमादिव्यवस्थितिर्न स्यात् ॥ ४२ ॥

मैवं दोषाभावः प्रमितौ हेतुस्ततो व्यवस्था स्यात् ।
परतस्त्वं तर्हि स्यान्न स्याद्भावानपेक्षणादेवम् ॥ ४३ ॥

स्वत एव प्रामाण्यज्ञानं तत्र स्वतस्त्वं तु ।
दोषाभावोपहितज्ञानग्रहहेतुकूटजन्यत्वम् ॥ ४४ ॥

वृत्तिज्ञानं प्रमितिस्तस्य ज्ञानं च साक्षिरूपमिति ।
तस्मिन् साक्षिग्राह्ये तत्प्रामाण्यं च तेन भासेत ॥ ४५ ॥

न च तत्प्रमात्वशङ्कानुपपत्तिः संशयादेव ।
दोषाभावोपहिता सामग्री नास्ति मात्वधीर्नातः ॥ ४६ ॥

अथवा स्वाश्रयविषयकधीसामान्यस्य योग्यता तत्त्वम् ।
उक्तस्थलेऽपि तद्धीविरहेऽप्यस्त्येव योग्यत्वम् ॥ ४७ ॥

दोषजमप्रामाण्यं ग्राह्यं विफलप्रवृत्तिलिङ्गेन ।
वृत्त्यविषयाप्रमात्वगविरहं साक्षी कथं विभासयतु ॥ ४८ ॥

**इति महामहोपाध्याय श्री त्यागराज मखि
पौत्र यज्ञेश्वरविरचिते सिद्धान्त-
कल्पद्रुमेऽनुपलब्धिमञ्जरी**

---

## ॥ अथ विषयमञ्जरी ॥

ब्रह्मस्वरूपबोधक वेदव्यतिरिक्तसर्वमानानाम् ।
व्यवहारे प्रामाण्यं तद्विषयाणां हि तत्र नो बाधः ॥ १ ॥

उपनिषदामेवं स्यात् परमार्थवेदकत्वरूपं तत् ।
तद्विषयस्य ब्रह्मात्मैक्यस्य क्वापि बाधविरहेण ॥ २ ॥

तच्चैक्यं तत्त्वमसीत्यादिमहावाक्यगम्यमेवेति ।
तद्धटकतत्त्वमर्थौ विवेचनीयावतः प्रथमम् ॥ ३ ॥

तत्रापि तत्पदार्थो निरूप्यते लक्ष्ममानाभ्याम् ।
लक्षणमिह द्विरूपं स्वरूपताटस्थ्यरूपभेदेन ॥ ४ ॥

स्वाभिन्नलक्षणं तु स्वरूपलक्ष्मेति कीर्त्यते कृतिभिः ।
सत्यं ज्ञानमनन्तं ब्रह्मेत्यादौ श्रुताविदं कथितम् ॥ ५ ॥

स्वावृत्ति स्वं रूपं कथमिव लक्ष्मेति चेत्स्ववृत्तित्वम् ।
काल्पनिकं लक्षणतानियामकं स्यात्तदुक्तमभियुक्तैः ॥ ६ ॥

यावल्लक्ष्यस्थिति यन्न वर्तमानं तु भेदकं भवति ।
तत्तु तटस्थं लक्षणमुदीर्यते गन्धवत्त्वमिव मह्याः ॥ ७ ॥

जगदुत्पत्तिस्थितिलयहेतुत्वं ब्रह्मणोऽपि यत्प्रकृते ।
अत्र जगत्पदवेद्यं कार्यं तद्धेतुता च कर्तृत्वम् ॥ ८ ॥

अव्याप्त्यतिप्रसङ्गौ नातो भवतोऽत्र लक्षणे दोषौ ।
कर्तृत्वमुपादानाध्यक्षचिकीर्षाप्रयत्नवत्त्वमिह ॥ ९ ॥

यः सर्वज्ञः सोऽकामयत मनोऽकुरुत वेदवाक्यानि ।
ईशस्योपादानाध्यक्षाद्याधारता प्रमाणानि ॥ १० ॥

जननादिष्वन्यतमं लक्षणघटकं विवक्षितं तेन ।
कृत्यादिष्वन्यतमप्रवेशतश्चात्र लक्षणानि नव ॥ ११ ॥

अथवाऽखिलभुवनोपादानत्वं ब्रह्मणो लक्ष्म ।
अत्र प्रमाणभूता श्रुतिर्यतो वेति जागर्ति ॥ १२ ॥

जगदध्यासाधिष्ठानत्वं प्रकृतित्वमत्र परमस्य ।
अथवा जगदाकारकपरिणाम्यज्ञानयोनित्वम् ॥ १३ ॥

सर्वमिदं त्वयमात्मा सच्च त्यच्चाभवद्ब्रह्म ।
इति तादात्म्यश्रवणं सज्जगतोः प्रकृतिभावेन ॥ १४ ॥

सन्भाति घटः प्रिय इति निर्देशोऽपि प्रवर्तते लोके ।
सच्चित्सुखस्वरूपब्रह्मैक्याध्यासहेतुकः सोऽपि ॥ १५ ॥

ब्रह्मणि दुःखस्यापि प्रकल्पनातो घटस्येव ।
तत्रापीष्टत्वमतिः कुतो न जाता निमित्तसद्भावात् ॥ १६ ॥

आरोपे सति हेतुर्विद्दश्यते नैव हेतुरस्तीति ।
आरोपोऽप्यापाद्यस्तस्माद् दुःखे तु नेष्टताध्यासः ॥ १७ ॥

जगति प्रतीयमानं नाम न रूपं च मायिकं प्रोक्तम् ।
उक्तप्रसङ्गसङ्गतसृष्टिः श्रौती निरूप्यते क्रमशः ॥ १८ ॥

नानाविचित्रजीवादृष्टयुतां विविधशक्तिकां मायाम् ।
अधितिष्ठन्नीशोऽर्थान् संकल्पयति स्वयं बुद्ध्वा ॥ १९ ॥

अत्र तदैक्षत सोऽकामयतेत्यादिश्रुतिर्भवेन्मानम् ।
अथ तन्मात्रपदोदितवियदादिजनिः परादसंकीर्णा ॥ २० ॥

शब्दस्पर्शौ रूपं रसगन्धौ चेति भूतगुणाः ।
गगनादिपृथिव्यन्तेष्वेकैकगुणप्रवृद्धितो ज्ञेयाः ॥ २१ ॥

वायावपि शब्दोऽस्ति प्रतीतितः स भ्रमो न निर्बाधात् ।
त्रिगुणानि पञ्चभूतान्येतानि त्रिगुणमायया जननात् ॥ २२ ॥

सत्त्वोपेतैरेतैर्ज्ञानेन्द्रियपञ्चकं क्रमादजनि ।
सर्वैरेव समेतैरन्तःकरणं चतुर्विधं जनितम् ॥ २३ ॥

दिग्वातसूर्यवरुणाश्विनः क्रमाद्धीन्द्रियाधिदैवानि ।
मनआदीनां क्रमशश्चन्द्रविधीशाच्युताश्च दैवानि ॥ २४ ॥

रजसोपेतैरेतैः क्रमशः कर्मेन्द्रियाणि जायन्ते ।
वह्नीन्द्रविष्णुमृत्युप्रजाधिपास्तत्र देवताः क्रमशः ॥ २५ ॥

मिलितैरेतैः पञ्च प्राणापानादयः समुत्पन्नाः ।
प्रागनेन प्राणो नासास्थानं श्रुतीरितं तस्य ॥ २६ ॥

अर्वाग्गमनोऽपानः पायुस्थो विष्वगञ्चनो व्यानः ।
सकलशरीरस्थितिरयमूर्ध्वगतिः स्यादुदानाख्यः ॥ २७ ॥

कण्ठस्थानगतोऽयं समाननामा तु नाभिदेशस्थः ।
पीताशितादिपरिणतिहेतुरयं वायुरीरितस्तज्ज्ञैः ॥ २८ ॥

तैश्च तमोगुणसहितैरमिश्रितैः किञ्च पञ्च भूतानि ।
पञ्चीकृतानि धात्रा भवन्ति पञ्चीकृतेर्विधा त्वेवम् ॥ २९ ॥

द्वेधा विभज्य वियतं पुनरपि भागं चतुर्विधं कृत्वा ।
अन्येषु योजनीयं वाय्वादिष्वेवमेव करणीयम् ॥ ३० ॥

त्रिवृतं त्रिवृतं श्रुत्या पञ्चीकरणं च लक्षितं न्यायात् ।
पञ्चीकृतिरश्रवणान्नास्तीत्यभिदधति केचिदाचार्याः ॥ ३१ ॥

पञ्चात्मकेऽपि तत्तद्व्यवहारस्तत्तदंशबाहुल्यात् ।
वैशेष्यात्तद्वादस्तद्वाद इतीरितं सूत्रे ॥ ३२ ॥

धीकर्मेन्द्रियमिलितप्राणमनोबुद्धिसंगतं लिङ्गम् ।
तन्मात्रैरारब्धं लोकान्तरगामि मुक्तिपर्यन्तम् ॥ ३३ ॥

तद्द्विविधं परमपरं परं तु लिङ्गं हिरण्यगर्भस्य ।
अस्माकं त्वपरं स्यात्परं महत्तत्त्वमपरमहमेव ॥ ३४ ॥

एवं तमःप्रधानैः पञ्चीभूतैर्भवन्ति भुवनानि ।
भूम्यादिसप्तलोकास्तथातलाद्याश्च सप्त ये लोकाः ॥ ३५ ॥

अण्डजरायुस्वेदोद्भिज्जाताख्याश्चतुर्विधास्तनवः ।
खगनरमशकतरूणां पापफलार्थं नगादिजन्मोक्तम् ॥ ३६ ॥

लिङ्गे तन्मात्रेषु स्थूलशरीरे हिरण्यगर्भस्य ।
साक्षादीशः कर्ता स्यादन्यत्रापि जीवरूपेण ॥ ३७ ॥

मूर्तित्रितयादन्यः प्रथमो जीवो हिरण्यगर्भाख्यः ।
हन्ताहमिमास्तिस्रः स वै शरीरीति वचनसंसिद्धः ॥ ३८ ॥

अथ विलयो भूतानां निरूप्यते भौतिकानां च ।
त्रैलोक्यस्य विनाशः प्रलयस्स चतुर्विधो बोध्यः ॥ ३९ ॥

नित्यो नाम प्रथमः सा सुप्तिः सकलकार्यलयरूपा ।
धर्माधर्मादीनां सद्भावात्कारणात्मना तत्र ॥ ४० ॥

अत एव सुखादेरपि नानुपपत्तिः प्रबुद्धस्य ।
न च तत्र मनोनाशे तदधीनप्राणनादिकं न स्यात् ॥ ४१ ॥

नास्त्येव प्राणादिः श्वासादीन्कल्पयन्ति पुरुषास्तु ।
न च मरणादविशेषो लिङ्गं ह्यत्रास्ति सूक्ष्मरूपेण ॥ ४२ ॥

अथवा मनसःशक्तिर्द्विविधा ज्ञानं क्रिया चेति ।
सुप्तौ ज्ञानविनाशेऽप्यस्त्येवान्या क्रियाशक्तिः ॥ ४३ ॥

प्राकृतलयस्तु कार्यब्रह्मविनाशेन सर्वकार्यलयः ।
अण्डाधिकारकारणकर्मोपरतौ विनश्यति ब्रह्मा ॥ ४४ ॥

जीवन्मुक्तः प्रागपि विदेहकैवल्यमश्नुते सोऽयम् ।
तेनैव तत्र वसतां तत्त्वज्ञानाद्विदेहकैवल्यम् ॥ ४५ ॥

कार्यब्रह्मणि मुक्ते तदधिष्ठितसर्वलोकभूतानाम् ।
प्रकृतौ मायायां किल विलयस्तेनैव तस्य तन्नाम ॥ ४६ ॥

नैमित्तिकस्तु दिवसोपरतौ कार्यस्य सर्वलोकानाम् ।
दिवसं चतुर्युगानां सहस्रमाहुः पुराणतत्त्वविदः ॥ ४७ ॥

दिनपरिमाणा रात्रिर्लयकालस्तेन तादृशो ज्ञेयः ।
आत्यन्तिकस्तु विलयो ब्रह्मज्ञानैकहेतुको मोक्षः ॥ ४८ ॥

स च युगपदेव भवतीत्याहुर्जीवैक्यवादिनः केचित् ।
नानाजीवमते तु क्रमेण जीवाः समेऽपि मुच्यन्ते ॥ ४९ ॥

कर्मोपरमादाद्यास्त्रयो लया ज्ञानहेतुकश्चरमः ।
पूर्वलयेष्वज्ञानानुवृत्तिरन्त्ये तु तन्निवृत्तिरपि ॥ ५० ॥

अथ भूतभौतिकानां लयक्रमोऽयं निरूप्यते श्रौतः ।
कारणलयेन कार्यप्रविलयवादो न युज्यते न्याये ॥ ५१ ॥

कार्यस्यावस्थानं स्यादाश्रयमन्तरा क्षणं तत्र ।
सृष्टिविपरीतरीत्या कार्यविनाशस्त्वदृष्टनाशेन ॥ ५२ ॥

परमाणुरूपनाशं न्यायविदोऽप्येवमेव कथयन्ति ।
क्षितिरप्सु तास्तु तेजसि तत्पवने वियति सोऽपि लयमेति ॥

तज्जीवाहंकारे स च हैरण्ये स चाव्यक्ते ।
ब्रह्मणि निरस्तभेदे तदपीत्येवं लयक्रमो बोध्यः ॥ ५४ ॥

ईदृशलयहेतुत्वं तटस्थलक्ष्मेश्वरस्य पूर्वोक्तम् ।
सति जगति कार्यरूपे कथमद्वैतं प्रसिध्यति ब्रूहि ॥ ५५ ॥

अद्वैते तात्पर्यं न द्वैते सृष्टिवाक्यानाम् ।
अध्यारोपन्यायादद्वैतं बोधयन्ति वेदान्ताः ॥ ५६ ॥

निर्विचिकित्साद्वैतप्रतिपत्तिर्नान्यथा घटते ।
क्वचन गुणप्रतिपादनमुपासनार्थं समारोपः ॥ ५७ ॥

शुद्धब्रह्मस्थलगतगुणा निषेधाय केवलं गदिताः ।
अथ च स्वरूपमैशं निरूपयामस्तथा वाच्यम् ॥ ५८ ॥

मायायां प्रतिबिम्बितचैतन्यं प्राहुरीश्वरं केचित् ।
तेषामयमभिसन्धिर्जीवेशानुगतसंविदेकास्ति ॥ ५९ ॥

मायारूपाविद्याप्रतिफलिता सा भवेदीशः ।
अन्तःकरणस्फुरिता सा जीवो नाम पण्डितैरुक्तः ॥ ६० ॥

सिन्ध्वन्धुप्रतिबिम्बितसूर्यभिदेवात्र जीवपरभेदः ।
जीवेशयोर्महत्वाणुत्वे तदुपाधिसंश्रयादेव ॥ ६१ ॥

जीववदुपाधिदोषाः स्युरीश्वरेऽपीति पक्षेऽस्मिन् ।
अरुचेः केचिद्ब्रुवते बिम्बं चैतन्यमीश्वरं विज्ञाः ॥ ६२ ॥

प्रतिबिम्बोऽविद्यायां जीवःस्यान्मनसि वा विविधे ।
मतभेदादत्र नभोजलसूर्यवदीशजीवयोर्भेदः ॥ ६३ ॥

अन्तर्यामित्वं कथमुपाध्यवृत्तेरिहेशितुर्मुखवत् ।
ईशोऽप्युपाधिवृत्तिर्वियदिव तेनास्य सर्वनेतृत्वम् ॥ ६४ ॥

नीरूपे प्रतिफलनं कथमिति चेत्तत्कथं रूपे ।
द्रव्यत्वोपादाने नात्मा द्रव्यं स निर्गुणोऽस्माकम् ॥ ६५ ॥

प्रतिबिम्बत्वाभावानुमानबाधं श्रुतिर्निरूपयति ।
एवं तत्पदवाच्यो निरूपितस्त्वंपदार्थमथ वक्ष्ये ॥ ६६ ॥

जीवोऽवस्थात्रयवान् जाग्रत्तत्राक्षजन्यधीरूपा ।
अक्षजवृत्तेः केचित्फलमावरणानुभूतिरित्याहुः ॥ ६७ ॥

जीवोऽविद्योपाधिक इति पक्षे व्यापकस्य जीवस्य ।
घटचिदभेदात्सततं तद्भानापत्तिवारणं त्वेवम् ॥ ६८ ॥

मूलाज्ञानावस्थाऽज्ञानावरणात्सदा न घटभानम् ।
अपरोक्षवृत्तियोगे तन्नाशाद्भा घटादिरिति ॥ ६९ ॥

व्यापकपक्षेऽप्यन्ये सम्बन्धार्थं विनिर्गमं वृत्तेः ।
अङ्गीचक्रुर्निपुणास्तेषामहमाशयं वक्ष्ये ॥ ७० ॥

घटदेशगेऽपि जीवे तद्भासकयोगकारिका वृत्तिः ।
व्यङ्ग्यव्यञ्जकभावो वृत्तौ सत्यां हि जायते तस्य ॥ ७१ ॥

स्वच्छाम्भःसम्बन्धाद्भित्तौ प्रतिबिम्बते यथा वक्त्रम् ।
वृत्त्युपरक्ते च तथा कलशे जीवस्तदा च सम्बन्धः ॥ ७२ ॥

अस्मिन्मते घटादेश्चिद्व्यञ्जकताऽपरोक्षत्वम् ।
वृत्त्यनुपरक्तवह्नेश्चिद्व्यञ्जकता न, तेन पारोक्ष्यम् ॥ ७३ ॥

अन्तःकरणोपाधिकजीवपरिच्छेदवत्त्वपक्षे तु ।
घटभासकतच्चिदभेदाभिव्यक्त्यर्थमिष्यते वृत्तिः ॥ ७४ ॥

निर्गतया वृत्त्या किल जीवघटोपेतसंविदोरभिदा ।
एवं मतभेदेन प्रयोजनं वृत्तिनिर्गमस्योक्तम् ॥ ७५ ॥

अक्षाजन्या मनसो वृत्तिः स्वप्नः सुषुप्तिस्तु ।
वृत्तिरविद्याजन्याऽविद्याविषया च कीर्तिता विबुधैः ॥ ७६ ॥

सुप्तावन्तर्भूते मृतिमूर्च्छे केचिदिच्छन्ति ।
केचिदवस्थान्तरमिति नास्त्युपयोगोऽत्र तद्विचारस्य ॥ ७७ ॥

स्वाभाविकं महत्त्वं जीवस्यौपाधिकः परिच्छेदः ।
स स्वप्रभोऽनुभूतिस्वरूप इत्युपनिषत्सु विख्यातः ॥ ७८ ॥

व्यवहारोऽनुभवामीत्यादिर्वृत्तिस्थसंविदा नेयः ।
एवं त्वमर्थविवृतिर्निरूप्यते तत्त्वमर्थयोरैक्यम् ॥ ७९ ॥

भेदस्य प्रत्यक्षाद्विरुद्धधर्माश्रयत्वलिङ्गेन ।
भेदश्रुतिस्मृतिभ्यामपि बाधादैक्यबोधको वेदः ॥ ८० ॥

आदित्ययूपवाकवदुपचरितार्थः कथंचिदुपपाद्यः ।
इति चेन्न प्रत्यक्षं विरोधि दोषो हि तत्र संभाव्यः ॥ ८१ ॥

अध्यक्षेणेतरथा चन्द्रमहत्त्वागमोऽपि बाध्येत ।
नाप्यनुमानविरोधः श्रुत्या बाधात्सुपर्णवाक्यमपि ॥ ८२ ॥

तात्पर्यलिङ्गसहिताभेदश्रुतिबाधकं न तद्विरहात् ।
औष्ण्यमिवायसि शुद्धेऽप्यारोप्यन्ते विरोधिनो धर्माः ॥ ८३ ॥

कर्तृत्वाद्यध्यासः कथमिव कुत्रापि तत्प्रमाविरहात् ।
न खलु भ्रमे प्रमाहितसंस्कारो हेतुरुच्यते किन्तु ॥ ८४ ॥

ज्ञानाहितसंस्कारः सोऽप्यत्रास्ते चिराध्यासात् ।
वाच्याभेदविरोधाल्लक्ष्यार्थैक्यं विवक्षितं प्रकृते ॥ ८५ ॥

सिद्धपरवाक्यदृष्टेः सिद्धं ब्रह्मैक्यमत्र विषय इति ।
विषये मञ्जर्येषा योषार्धतनौ समर्पिता भक्त्या ॥ ८६ ॥

**॥ इति महामहोपाध्याय श्रीत्यागराजमखिराज-**
**पौत्रयज्ञेश्वरविरचिते सिद्धान्तकल्पद्रुमे**
**विषयमञ्जरी ॥**

---

N. B. 75 तमे श्लोके उपेत - अवच्छिन्न इत्यर्थः ।

## ॥ अथ प्रयोजनमञ्जरी ॥

यद्रूपेणावगतं यदिष्यते स्वात्मवृत्तितया ।
तद्रूपेण तदिष्टं प्रयोजनं नाम शास्त्रविदाम् ॥ १ ॥

तच्च द्विविधं प्रोक्तं मुख्यं गौणमिति तत्राद्यम् ।
सुखदुःखविरहरूपं चरमं त्वन्यतरसाधनीभूतम् ॥ २ ॥

सुखमपि च द्विविधं स्यादतिशयिनिरतिशयभेदेन ।
विषयानुषङ्गजनितं सातिशयं पुण्यकर्मफलभूतम् ॥ ३ ॥

प्राक्तनविचित्रसुकृताधीनस्रक्चन्दनादिसङ्गोत्थम् ।
ब्रह्मानन्दकणाङ्कं सत्वं संसारिणां सुखं विविधम् ॥ ४ ॥

उपजीवन्ति लवांशं ब्रह्मानन्दस्य सर्वभूतानि ।
निरतिशयं तु सुखं स्याद्ब्रह्मैवेति श्रुतौ समुद्घोषः ॥ ५ ॥

ब्रह्मानन्दावाप्तिः शोकनिवृत्तिश्च मुक्तिरस्माकम् ।
ब्रह्मैव भवति तज्ज्ञः शोकं तरतीत्ति वेदवचनाभ्याम् ॥ ६ ॥

वैकुण्ठादिमलोकप्राप्तिस्तत्रैव विषयभोगो वा ।
न हि मुक्तिः कृतकत्वात्पुनरावृत्तेः श्रुतेर्विरोधाच्च ॥ ७ ॥

नन्वानन्दावाप्तेः शोकनिवृत्तेश्च तावकेऽपि मते ।
सादित्वे समदोषः श्रवणाद्यनपेक्षता च नित्यत्वे ॥ ८ ॥

मैवं वादीः सिद्धं ब्रह्मैवास्माभिरिष्यते मुक्तिः ।
अज्ञातं सद्विषयो ज्ञातं ब्रह्म प्रयोजनं भवति ॥ ९ ॥

सिद्धस्याप्यतथात्वभ्रान्त्याप्युपपद्यते प्रवृत्तिरिह ।
विस्मृतगलगतकनकाभरणाद्यन्वेषणं हि संदृष्टम् ॥ १० ॥

मूलाज्ञानादेरपि मालाभुजगादिवन्निवृत्तस्य ।
उपपद्यते निवृत्तिस्तस्मादस्मन्मते न चोद्यं ते ॥ ११ ॥

ज्ञानादेव तु मोक्षो नान्यत्कर्मादि साधनं तत्र ।
श्रुतिरेवमाह किञ्च ज्ञानादज्ञाननाशनं युक्तम् ॥ १२ ॥

अभयं वै जनकेतिश्रुतिवचनान्नारदीयवचनाच्च ।
ब्रह्मात्मैक्यालम्बं तत्त्वज्ञानं भवेद्विमोक्षाय ॥ १३ ॥

तच्चापरोक्षमेवापरोक्षविभ्रान्तिविघटनायालम् ।
अपरोक्षज्ञानमिदं तत्त्वमसीत्यादिवाक्यजं केचित् ॥ १४ ॥

संवित्साक्षात्त्वं किल विषयविशेषप्रयुक्तमिति चाहुः ।
ब्रह्मप्रमात्रभेदावगाहि शब्देन जायमानमपि ॥ १५ ॥

अपरोक्षरूपमेतद्दशमस्त्वमसीति वाक्यजन्यमिव ।
अत एव शास्त्रदृष्टिव्यपदेशं ब्रह्मसूत्रकारोऽपि ॥ १६ ॥

इन्द्रप्रतर्दनाख्ये न्याये ज्ञानैकगोचरं विदधे ।
मननध्यानविशोधितमन एवात्माऽपरोक्षकरणमिति ॥ १७ ॥

केचिदवोचन्संवित्साक्षात्त्वं करणतन्त्रमेवेति ।
पटुकरणः सूक्ष्मतमं योग्यं वस्तु स्फुटं यदीक्षेत ॥ १८ ॥

अपटुकरणस्तु नैतत् द्रष्टुं शक्नोति वस्तु यतमानः ।
तस्मात्करणनिबन्धनमध्यक्षत्वं न शब्दजे ज्ञाने ॥ १९ ॥

मन एवात्माध्यक्षे करणं मननादिसंस्कृतं भवति ।
इन्द्रियजन्यत्वं किल साक्षात्त्वे हेतुरित्यभिप्रेत्य ॥ २० ॥

मनसैवेति श्रुतिरपि मनसोऽगम्यत्वगीस्त्वशुद्धिपरा ।
औपनिषदत्ववादो भज्येतात्मा मनोऽधिगम्यश्चेत् ॥ २१ ॥

मैवं स प्राणालिकवेदशिरोगम्यताविषयः ।
श्रुत्यनुपजीविमानान्तरगम्यत्वे हि तद्विरोधः स्यात् ॥ २२ ॥

आत्मापरोक्षकरणं मनोऽपि संस्कारमर्हति श्रवणात् ।
सूत्रोक्तशास्त्रदृष्टिर्निरुक्तरूपेति नैव तद्रोधः ॥ २३ ॥

वाचस्पतिमिश्राणामयमभिसन्धिर्गरीयान् हि ।
ईदृशमात्मज्ञानं पापक्षयरूपशुद्धितो भवति ॥ २४ ॥

सा चेशार्पितकर्मानुष्ठानात्कामनारहितात् ।
धर्मेणेति तमेतं वेदेत्यादिश्रुतिः प्रमाणमिह ॥ २५ ॥

अपि च कषाये कर्मभिरित्यादिस्मृतिवचोभिरनुयाता ।
साक्षात्कारे साक्षाच्छ्रवणादिकमेव कारणं भवति ॥ २६ ॥

आत्मा वारे द्रष्टव्य इति श्रुतिरत्र मानतामेति ।
तात्पर्यनिर्णयार्थन्यायविचारक्रिया श्रवणम् ॥ २७ ॥

मान्तरविरोधशङ्काऽपोहनतर्कानुचिन्तनं मननम् ।
विपरीतमतिविधूत्यै श्रुतमतधीसन्ततिर्निदिध्यासा ॥ २८ ॥

आत्मापरोक्षहेतुः श्रवणादित्रितयमेतदित्येके ।
केचित्क्रमात्परं प्रति पूर्वं पूर्वं निदानमित्याहुः ॥ २९ ॥

श्रवणं प्रधानमारादुपकारकमस्य मननादि ।
श्रवणानन्तरभाव्यपि फलोपकारीति केचिदाचार्याः ॥ ३० ॥

नात्र तृतीयाध्यायप्रोक्तं शेषत्वरूपमङ्गत्वम् ।
श्रुतिलिङ्गमुख्यमानैरधिगम्यं तद्धि नात्र तत्किमपि ॥ ३१ ॥

श्रुत्याद्यैरत्रापि व्यवस्थितिस्तत्र तत्र निर्णीता ।
अत एव तत्स्वरूपप्रतिपत्त्यै तान्युदाहरिष्यामः ॥ ३२ ॥

'दध्ना जुहोति'वाक्ये होमाङ्गत्वे श्रुतिस्तृतीयास्ति ।
अर्थप्रकाशशक्तिर्लिङ्गं तच्चास्ति बर्हिरिति मन्त्रे ॥ ३३ ॥

अङ्गप्रधानबोधकपदसमभिव्याहृतिर्वाक्यम् ।
अग्निष्टोमेति यथा वाक्यं विनियोजकं प्रवर्ग्यस्य ॥ ३४ ॥

उभयाकांक्षारूपप्रकरणवशतः प्रयाजादेः ।
दर्शादिषु सफलेषु प्रदर्शिता शेषता विबुधैः ॥ ३५ ॥

स्थानं च सन्निधानं तेन च सांनाय्यपात्रशेषत्वम् ।
शुन्धध्वं दैव्यायेत्येतन्मन्त्रस्य निश्चितं धीरैः ॥ ३६ ॥

यौगिकपदं समाख्याध्वर्यवकाण्डोक्तकर्मशेषत्वम् ।
अध्वर्योरनया स्यादेवं श्रुत्याद्युदाहृतं विज्ञैः ॥ ३७ ॥

श्रुत्यादिष्वन्यतमं श्रवणाङ्गत्वे न दृश्यते मानम् ।
तार्तीयशेषतात्मकमङ्गत्वं नास्ति तेन मननादौ ॥ ३८ ॥

सफलश्रवणप्रकरणपठितं मननं तदङ्गमिति चेन्न ।
ते ध्यानयोगवाक्ये ध्यानस्यापि प्रतीयते हि फलम् ॥ ३९ ॥

अतिदेशानतिदेशौ कर्मस्वङ्गत्वचिन्तनाद्भवतः ।
श्रवणं कस्य प्रकृतिस्तेन विचारो यदिष्यते विफलः ॥ ४० ॥

अथवा घटादिकार्ये मृत्पिण्डादेःप्रधानहेतुत्वम् ।
न तु दण्डादेरेवं व्यवहारादस्तु मुख्यता श्रवणे ॥ ४१ ॥

मेयावगतौ मानं प्रधानमन्यत्कथंचिदुपयोगि ।
तेनाङ्गि श्रवणमिति प्रोक्तं श्रीविवरणाचार्यैः ॥ ४२ ॥

नित्यानित्यविवेको दृष्टादृष्टेष्वतीव वैराग्यम् ।
शमदमविरतितितिक्षा समाधिविश्वासषट्कयोगश्च ॥ ४३ ॥

मोक्षेच्छेति चतुष्टयमेतच्छ्रवणेऽधिकारतामेति ।
शमनं मनसः शान्तिर्दमनं बहिरिन्द्रियस्य दममाहुः ॥ ४४ ॥

उपरतिरव्याक्षेपः शीतोष्णसहिष्णुता तितिक्षा स्यात् ।
गुरुविश्वासः श्रद्धा चित्तैकाग्र्यं समाधानम् ॥ ४५ ॥

उपरतिरिह सन्यासः सन्यासिभिरेव तेन कर्तव्यम् ।
श्रवणादिकमिति केचिद्ब्रुवते तच्चापरे न मृष्यन्ति ॥ ४६ ॥

उपरमपदस्य शक्तिर्न तत्र नैवास्ति लक्षणाबीजम् ।
जनकादावपि दृष्टेः सर्वाश्रमिणां विचार इत्याहुः ॥ ४७ ॥

चित्तैकाग्र्यद्वारा सगुणोपास्तिः परात्मसंदृष्टौ ।
हेतुरिति तद्विवक्षा वेदान्तेषु प्रतीयते बहुधा ॥ ४८ ॥

सगुणब्रह्मोपास्तिं कुर्वाणा अर्चिरादिमार्गेण ।
ब्रह्मापरमधिगम्य श्रवणाद्यैस्तत्र मुच्यन्ते ॥ ४९ ॥

कर्मपराः पितृलोकं प्राप्ता धूमादिकेन मार्गेण ।
भोगक्षये स्वकर्मानुगुणं योनीः प्रपद्यन्ते ॥ ५० ॥

प्रतिषिद्धपरा निरयान् विविधाननुभूय भुक्तकर्माणः ।
रासभकोलादिजनीरश्नुवते श्रुतिभिरेवमुद्घुष्टम् ॥ ५१ ॥

प्रत्यगभिन्नब्रह्मज्ञानवतां नास्ति कुत्रचिद्गमनम् ।
तस्य प्राणा नोत्क्रामन्तीत्यादिश्रुतिः प्रमाणमिह ॥ ५२ ॥

प्रारब्धकर्मनाशो यावत्सुखदुःखभुक्तिरेतस्य ।
अप्रतिबद्धज्ञानाद्विदेहकैवल्यमाप्यते पश्चात् ॥ ५३ ॥

ज्ञानेन सर्वकर्मध्वंसश्रवणात्तथैव गीतोक्तेः ।
प्रारब्धकर्ममात्रं परिशिष्यत इत्यसंगतं वचनम् ॥ ५४ ॥

ज्ञानसमकालकर्मश्रवणान्नाभुक्तमित्यपि स्मृत्या ।
प्रारब्धेतरविषयं कर्मध्वंसावबोधकं वाक्यमिदम् ॥ ५५ ॥

प्रारब्धमपि च संचितमागामीति त्रिधा भवेत्कर्म ।
दुष्कृतसुकृतविभेदात्संचितकर्म द्विधा श्रुतं श्रुतिषु ॥ ५६ ॥



नन्वज्ञाननिवृत्तौ तत्त्वज्ञे स्यात्कथं शरीरादि ।
नैवं निष्प्रतिबन्धज्ञानाभावान्न नाश्यतेऽज्ञानम् ॥ ५७ ॥

एकविमोक्षे सर्वो मुच्येताज्ञानकैवल्यात् ।
इति चेदिष्टापत्तिं ब्रुवते केचिद्विभाव्य जीवैक्यम् ॥ ५८ ॥

परिहर्तुममुं दोषं स्वीकृत्याज्ञाननानात्वम् ।
इन्द्रो मायाभिरिति श्रुत्या निगदन्ति केऽपि मर्यादाम् ॥५९॥

ब्रह्मावारकशक्तिप्रभेदमालम्ब्य जीवभेदेन ।
एकाविद्यापक्षेऽप्याहुः परिहारमस्य केप्यन्ये ॥ ६० ॥

यावदधिकारसूत्रे प्रारब्धास्वादकालभेदेन ।
इन्द्रादीनां मुक्तिर्निरूपिता तेन युज्यते ह्येतत् ॥ ६१ ॥

॥ इति चतुरधिकशतप्रबन्धप्रबन्धृश्रीमदप्पय्य-
दीक्षितेन्द्रवंशावतंसानां महामहोपाध्याय-
बिरुदाञ्चितानां श्रीत्यागराजमखिराजानां
पौत्रेण नीलकण्ठदीक्षिततनूजेन
यज्ञेश्वरेण विरचिते
सिद्धान्तकल्पद्रुमे
प्रयोजनमञ्जरी ॥




समाप्तोऽयं ग्रन्थः ॥

---

...यम् प्रेस्, तिरुवल्लिक्केणी, मद्रास्—५.